॥ शुक्रस्तवराजः ॥

अस्य श्रीशुक्रस्तवराजस्य प्रजापतिः ऋषिः अनुष्टुप् छन्दः
शुक्रो देवता श्रीशुक्रप्रीत्यर्थे पाठे विनियोगः ॥

नमस्ते भार्गवश्रेष्ठ दैत्यदानवपूजित ।
वृष्टिरोधप्रकर्त्रे च वृष्टिकर्त्रे नमो नमः ॥ १॥

देवयानिपतिस्तुभ्यं वेदवेदाङ्गपारग ।
परेण तपसा शुद्धः शङ्करो लोकसुन्दरः ॥ २॥

प्राप्तौ विद्यां जीवनाख्यां तस्मै शुक्रात्मने नमः ।
नमस्तस्मै भगवते भृगुपुत्राय वेधसे ॥ ३॥

तारामण्डलमध्यस्थ स्वभासाभासिताम्बरः ।
यस्योदये जगत्सर्वं मङ्गलार्हं भवेदिह ॥ ४॥

अस्तं याते ह्यरिष्टं स्यात्तस्मै मङ्गलरूपिणे ।
त्रिपुरावासिनो दैत्यान् शिवबाणप्रपीडितान् ॥ ५॥

विद्ययाऽजीवयच्छुक्रो नमस्ते भृगुनन्दन ।
ययातिगुरवे तुभ्यं नमस्ते कविनन्दन ॥ ६॥

वलिराज्यप्रदो जीवस्तस्मै जीवात्मने नमः ।
भार्गवाय नमस्तुभ्यं पूर्वगीर्वाणवन्दित ॥ ७॥

जीवपुत्राय यो विद्यां प्रादात्तस्मै नमो नमः ।
नमः शुक्राय काव्याय भृगुपुत्राय धीमहि ॥ ८॥

नमः कारणरूपाय नमस्ते कारणात्मने ।
स्तवराजमिमं पुण्यं भार्गवस्य महात्मनः ॥ ९॥

यः पठेच्छृणुयाद्वापि लभते वाञ्छितं फलम् ।
पुत्रकामो लभेत्पुत्रान् श्रीकामो लभते श्रियम् ॥ १०॥

राज्यकामो लभेद्राज्यं स्त्रीकामः स्त्रियमुत्तमाम् ।
भृगुवारे प्रयत्नेन पठितव्यं समाहितेः ॥ ११॥

अन्यवारे तु होरायां पूजयेद्भृगुनन्दनम् ।

रोगार्तो मुच्यते रोगाद्भयार्तो मुच्यते भयात् ॥ १२॥

यद्यत्प्रार्थयते जन्तुस्तत्तत्प्राप्नोति सर्वदा ।
प्रातःकाले प्रकर्तव्या भृगुपूजा प्रयत्नतः ।
सर्वपापविनिर्मुक्तः प्राप्नुयाच्छिवसन्निधिम् ॥ १३॥

इति श्रीब्रह्मयामले शुक्रस्तवराजः सम्पूर्णः ॥